# अष्टावक्र संहिता।

श्रीमहामुनि अष्टावक्र विरचिता।

श्रीयुक्तबाबु भुवनचन्द्र वसाक महोदयस्य

प्रार्थनया

श्रीयुक्त नवचन्द्र शिरोमणिना परिशोधिता।

८ नं निमतला घाट ष्ट्रीटस्थ

श्रीयुक्तबाबु भुवनचन्द्र वसाकेन प्रकाशिता।

कलिकाता नगर्य्यां

८ नं निमतला घा[illegible] ष्ट्रिटस्थ

संवादज्ञानरत्नाकर[illegible] नरत्ना[illegible]यन्त्रे श्रीभुवनचन्द्र वसाकेन

मुद्रिता।

१८८७

३८६

FOR
इ.के
८१

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्रीलक्ष्मीधर - विद्यामन्दिर,
देवप्रयाग ( गढ़वाल-हिमालय )
व्यवस्थापक- पं. चक्रधरजोशी

# अष्टावक्र संहिता ।

श्रीमहामुनि अष्टावक्र विरचिता ।

श्रीयुक्तबाबु भुवनचन्द्र वसाक महोदयस्य

प्रार्थनाया

श्रीयुक्त नवचन्द्र शिरोमणिना परिशोधिता ।

८ नं निमतला घाट ष्ट्रीटस्थ

श्रीयुक्तबाबु भुवनचन्द्र वसाकेन प्रकाशिता ।

कलिकाता नगर्य्याम्

८ नं निमतला घाट ष्ट्रीटस्थ

वाद्ज्ञानरत्नाकराख्ययन्त्रे श्रीभुवनचन्द्र वसाकेन

मुद्रिता ।

१८८१

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्रीलक्ष्मीधर-विद्यामन्दिर.
देवप्रयाग (गढ़वाल-हिमालय)
व्यवस्थापक- पं. चक्रधरजोशी

नमः परमात्मने ।

# अष्टावक्रसंहिता ।

जनक उवाच ।

कथं ज्ञानमवाप्नोति कथं मुक्ति र्भविष्यति ।
वैराग्यञ्च कथं प्राप्यमेतत् त्वं ब्रूहि मे प्रभो ॥

अष्टावक्र उवाच ।

मुक्तिमिच्छसि चेत्तात विषयान् विषवत्त्यज ।
क्षमार्ज्जवदयातोष सत्यं पीयूषवद्भज ॥
न पृथ्वी न जलं नाग्निर्न वायु र्द्यौ नवा भवान् ।
एषां साक्षिणमात्मानं चिद्रूपं विद्धि मुक्तये ॥
यदि देहं पृथक्कृत्य चिति विश्राम्य तिष्ठसि ।
अधुनैव सुखी शान्तो बन्धान्मुक्तोभविष्यसि ।
न त्वं विप्रादिकोवर्णो नाश्रमी नाक्षगोचरः ॥
असङ्गोऽसि निराकारो विश्वसाक्षी सुखी भव ।
धर्म्माधर्म्मौ सुखं दुःखं मानसानि न ते विभो ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

न कर्त्तासि न भोक्तासि मुक्तएवासि सर्व्वदा ।
एकोद्रष्टासि सर्व्वस्य मुक्तप्रायोऽसि सर्व्वदा ॥
अयमेव हि ते बन्धो द्रष्टारं पश्यसीतरम् ।
अहं कर्त्ता ह्यहं मानी महाकृष्णाहि दंशितः ॥
नाहं कर्त्तेति विश्वासामृतं पीत्वा सुखीभव ।
एकोविशुद्धबोधोऽहमिति निश्चयवह्निना ॥
प्रज्वाल्याज्ञानगहनं वीतशोकः सुखीभव ।
यत्र विश्वमिदं भाति कल्पितं रज्जुसर्पवत् ॥
आनन्दः परमानन्दः स बोधस्त्वं सुखञ्चर ।
मुक्ताभिमानी मुक्तोहि बद्धोबद्धाभिमान्यपि ॥
किम्वदन्तीह सत्येवं या मतिः सा गतिर्भवेत् ।
आत्मा साक्षी विभुः पूर्णएको मुक्तश्चिदक्रियः ॥
असङ्गोनिस्पृहः शान्तो भ्रमात् संसारवानिव ।
कूटस्थं बोधमद्वैतमात्मानं परिभावय ॥
आभामोहं भ्रमं मुक्ता वाह्यभावमथान्तरम् ।
देहाभिमानपाशेन चिरं बद्धोऽसि पुत्रक ॥
बोधोऽहं ज्ञानखड्गेन तं निकृत्य सुखीभव ।
निःसङ्गोनिष्क्रियोऽसि त्वं स्वप्रकाशो निरञ्जनः ॥
अयमेव हि ते बन्धः समाधिमनुतिष्ठसि ।
त्वया व्याप्तमिदं सर्व्वं त्वयि प्रोतं यथार्थतः ॥
शुद्धबुद्धस्वभावस्त्वं मागमः क्षुद्रचित्तताम् ।
निरपेक्षो निर्व्विकारो निर्भयः शीतलाशयः ॥
अगाधबुद्धिरक्षुब्धोभव चिन्मात्रवासनः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

इत्युपदेशषोड़शकम् ॥

साकारमनृतं विद्धि निराकारन्तु निश्चलम् ।
एतत्तत्त्वोपदेशेन न पुनर्भवसम्भवः ॥
यथादर्शेऽप्यमध्यस्थः प्रतिविम्बः प्रकाशते ।
तथैवास्मिन् शरीरेऽन्तः परितः परमेश्वरः ॥
एकं सर्व्वगतं व्योम वहिरन्तर्यथा घटे ।
नित्यं निरन्तरं ब्रह्म सर्व्वभूतगणे तथा ॥
अहो निरञ्जनः शान्तो बोधोऽहं प्रकृतेः परः ।
एतावन्तमहं कालं मोहेनैव विड़म्बितः ।
यथा प्रकाशयाम्येको देहमेकं जगत्तथा ॥
अतो मम जगत् सर्व्वमथवा च न किञ्चन ॥
सशरीरमिदं विश्वं परित्यज्य मयाधुना ।
कुतश्चित् कौशलादेव परमात्मा विलोक्यते ॥
यथा नतोयतो भिन्नास्तरङ्गफेणवुद्वुदाः ।
आत्मनो न तथा भिन्नं विश्वमात्मविनिर्गतम् ॥
तन्तुमात्रोभवेदेव पटोयद्वद्विचारितः ।
आत्मतन्मात्रमेवेदं तद्वद्विश्वे विचारिते ॥
यथैवेक्षुरसे क्लृप्ता तेन व्याप्तैव शर्करा ।
तथा विश्वं मयि क्लृप्तं मया व्याप्तं निरन्तरम् ॥
आत्माज्ञानात् जगद्भाति नात्मज्ञानाद्विभासते ।
रज्ज्वज्ञानादहिर्भाति तज्ज्ञानाद्भासते न हि ॥
प्रकाशो मे निजं रूपं नातिरिक्तोऽस्म्यहन्ततः ।
यदा प्रकाशते विश्वं तदाहं भासये वहिः ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अहो विकल्पितं विश्वमज्ञानान्मयि भासते ।
रूप्यं शुक्तौ फणी रज्जौ वारि सूर्य्यकरे यथा ॥
मत्तो विनिर्गतं विश्वं मय्येव लयमेष्यति ।
मृदि कुम्भो जले वीचिः कनके कटकं यथा ॥
अहो अहो नमो मह्यं विनाशो यस्य नास्ति मे ।
ब्रह्मादिस्तम्बपर्य्यन्तं जगन्नाशेऽपि तिष्ठति ॥
अहो अहो नमो मह्यं एकोनास्तीति मत्समः ।
अहं स्पर्शं शरीरेण येन विश्वं चिरं धृतम् ॥
अहो अहो नमो मह्यं यस्य मे नास्ति किञ्चन ।
अथवा यस्य मे सर्व्वं यद्वाङ्मनसगोचरम् ।
ज्ञानं ज्ञेयं तथा ज्ञाता त्रितयं नास्ति वास्तवम् ॥
अज्ञया भाति यत्रेदं सोऽहमस्मि निरञ्जनम् ।
द्वैतमूलमहो दुःखं नान्यत्तस्यास्ति भेषजम् ॥
दृश्यते तन्मृषा सर्वमेकोऽहं चिद्रसोऽमलः ।
बोधमात्रोऽहमज्ञानादुपाधिः कल्पितो मया ।
एवं विमृषतो नित्यं निर्व्विकल्पा स्थितिर्मम ॥
अहो मयि स्थितं सर्व्वं वस्तुतो न मयि स्थितम् ।
न मे बन्धोऽस्ति मोक्षो वा भ्रान्तिः शान्ता निराश्रया ॥
सशरीरमिदं विश्वं न किञ्चिदिति निश्चितम् ।
शुद्धचिन्मात्र आत्मा च तत् कस्मिन् कल्पनाधुना ॥
शरीरं स्वर्गनरकौ बन्धमोक्षौ भयं तथा ।
कल्पनामात्रमेवैतत् किं कार्य्यं मे चिदात्मनः ॥
अहो जनसमूहेऽपि न द्वैतं पश्यतो मम ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

आश्चर्य्यमिव संवृत्तं नारं तं करवाण्यहम् ॥
नाहं देहो न मे देहो जीवो नाहमहं हि चित् ।
अयमेव हि मे बन्ध आसीद्यो जीविते स्पृहा ॥
अहो भुवनकल्लोलै र्विचित्रैर्द्राक् समुत्थितम् ।
मय्यनन्ते महाम्भोधौ चित्तवाते समुद्यते ॥
मय्यनन्ते महाम्भोधौ चित्तवाते प्रशाम्यति ।
अभाग्याज्जीववणिजो जगत्पोतो विनश्वरः ॥
मय्यनन्ते महाम्भोधौ आश्चर्य्यं जीव वीचयः ।
उद्यन्ति घ्नन्ति खेलन्ति प्रविशन्ति स्वभावतः ॥

इत्यात्मानुभवोल्लासाष्टाविंशकम् ।

अविनाशिनमात्मानमेकं विज्ञाय तत्त्वतः ।
तवात्मज्ञानधीरस्य कथमर्थार्ज्जने रतिः ॥
आत्माज्ञानादहो प्रीतिर्विषय भ्रम गोचरे ।
शुक्तेरज्ञानतो लोभो यथा रजत विभ्रमे ॥
विश्वं स्फुरति यत्रेदं तरङ्गइव सागरे ।
सोऽहमस्मीति विज्ञाय किं दीनमिव धावसि ॥
श्रुत्वापि शुद्धचैतन्यमात्मानमति सुन्दरम् ।
उपस्थेऽत्यन्त संसक्तो मालिन्यमधिगच्छति ॥
सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि ।
मुनेर्जानत आश्चर्य्यं ममत्वमनुवर्त्तते ॥
आस्थितः परमाद्वैतं मोक्षार्थेऽपि व्यवस्थितः ।
आश्चर्य्यं कामवशगो विकलः केलिशिक्षया ॥



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

उद्भूतं ज्ञानदुर्म्मित्रमवधार्य्यातिदुर्ब्बलम् ।
आश्चर्य्यं काममाकाङ्क्षेत् कालमन्तमनुश्रितम् ॥
इहामुत्रविविक्तस्य नित्यानित्यविवेकिनः ।
आश्चर्य्यं मोक्षकामस्य मोक्षादेव विभीषिका: ॥
धीरस्तु भुज्यमानोपि पीड्यमानोऽपि सर्व्वदा ।
आत्मानं केवलं पश्यन् संतुष्यति न कुप्यति ॥
चेष्टमानं शरीरं स्वं पश्यत्यन्यशरीरवत् ।
संस्तवे चापि निन्दायां कथं क्षुभ्येन्महाशयः ॥
मायामात्रमिदं विश्वं पश्यन् विगतकौतुकः ।
अपि सन्निहिते मृत्यौ कथमेष्यति धीरधीः ॥
स्वभावादेव जानानो दृश्यमेतन्न किञ्चन ।
इदं ग्राह्यमिदं त्याज्यं स किं पश्यति धीरधीः ॥
निस्पृहं मानसं यस्य नैराश्येपि महात्मनः ।
तस्यात्मज्ञानतृप्तस्य तुलना केन जायते ।
अन्तस्त्यक्तकषायस्य निर्द्वन्द्वस्य निराशिषः ॥
यदृच्छया गतो भोगो न दुःखाय न तुष्टये ।

इत्युद्देशचतुर्द्दशकम् ।

महात्मज्ञानधीरस्य खेलतो भोगलीलया ।
न हि संसारवाहीकैर्मूढैः सह समानता ॥
यत्पदं प्रेप्सवो दीनाः शक्राद्याः सर्व्वदेवताः ।
अहो तत्र स्थितो योगी न हर्षमुपगच्छति ॥
तज्ज्ञस्य पुण्यपापाभ्यां स्पर्शोह्यन्तर्न जायते ।
नह्याकाशस्य धूमेन दृश्यमानापि सङ्गतिः ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

आत्मवेदं जगत् सर्व्वं ज्ञातं येन महात्मना।
यदृच्छया वर्त्तमानं तं निषेद्धुं क्षमेत कः॥
आब्रह्मस्तम्बपर्य्यन्तं भूतग्रामे चतुर्विधे।
विज्ञस्यैव हि सामर्थ्यमिच्छानिच्छाविवर्जने॥
आत्मानमद्वयं कश्चित् जानाति जगदीश्वरम्।
यद्वेत्ति तत्सकुरुते न भयं तस्य कुत्रचित्॥

इत्युत्तरषटकम्।

नते सङ्गोऽस्ति केनापि किं शुद्धस्त्यक्तुमिच्छसि।
सङ्घातविलयं कुर्व्वन् सर्व्वं कुर्व्वन्नेवं लयं व्रज॥
प्रत्यक्षमप्यवस्तुत्वाद्विश्वं नास्त्यमले त्वयि।
रज्जुसर्प इव व्यक्तमेवमेव लयं व्रज॥
उदेति भवतो विश्वं वारिधेरिव बुद्बुदाः।
इति ज्ञात्वैवमात्मानमेव मेव लयं व्रज॥
समदुःखसुखः पूर्ण आशानैराश्ययोः समः।
सम जीवितमृत्युः सन् एवमेव लयं व्रज॥

इति लय चतुष्कम्।

आकाशवदनन्तोऽहं घटवत् प्राकृतं जगत्।
इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयम्॥
महोदधिरिवाहं सप्रपञ्चो वीचिसन्निभः।
इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयम्॥
अहं संशुक्ति संकाशो रूप्यबुद्धिश्च कल्पना।
इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयम्॥
अहं वा सर्व्वभूतेषु सर्व्वभूतान्यथो मयि।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयम् ॥

इत्युत्तरोपदेशचतुष्कम् । शिष्यभावना ।

मय्यनन्ते महाम्भोधौ विश्वपोत इतस्ततः ।
भ्रमति स्वान्तवातेन मम नास्ति सहिष्णुता ॥
मय्यनन्ते महाम्भोधौ जगद्वीचिस्स्वभावतः ।
उदेतु वास्तमायातु नमे वृद्धिर्न च क्षयः ॥
मय्यनन्ते महाम्भोधौ विश्वनाम विकल्पना ।
इति शान्तो निराकार एतदेव हि मास्थितः ॥
नात्माभावेषु नोभावस्तत्रानन्ते निरञ्जने ।
इत्यसक्तोऽस्पृहः शान्त एतदेव हि मास्थितः ॥
अहोचिन्मात्रमेवाहमिन्द्रजालमिदं जगत् ।
ततो मम कथं कुत्र हेयोपादानकल्पना ॥

इत्यनुभवपञ्चकम् । शिष्यं प्रति ।

तदाबन्धो यदा चित्तं किञ्चिद्वाञ्छति शोचति ।
किञ्चिन्मुञ्चति गृह्णाति किञ्चित् कुप्यति हृष्यति ॥
तदा मुक्तिर्यदा चित्तं मनसक्तं सर्व्वदृष्टिषु । [ कुप्यति ॥
न वाञ्छति न शोचति न मुञ्चति न गृह्णाति न हृष्यति न
तदा बन्धो यदा चित्तं सक्तं कास्वपि दृष्टिषु ।
तदा मोक्षो यदा चित्तं मासक्तं सर्व्वदृष्टिषु ॥
यदानाहं तदा मोक्षो यदाहं बन्धनं तदा ।
मत्येपि हेतया किञ्चित् मागृहाण विमुञ्चमा ॥

इति बन्धमोक्षचतुष्टयम् ।

कृताकृतानि द्वन्द्वानि कदा शान्तानि कस्य वा ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

एवं ज्ञात्वेह निर्वेदाद्भव त्यागपरोऽव्रती ॥
कस्यापि तात धन्यस्य लोकचेष्टावलोकनात् ।
जीवितेच्छा बुभुक्षा च बुभुत्सोपशमं गता ॥
अनित्यं सर्व्वमेवेदं तापत्रितय दूषितम् ।
असारं निन्दितं हेयमिति निश्चित्य शाम्यति ॥
कोऽसौ कालो वयः किंवा यत्र द्वन्द्वानि नो नृणाम् ।
तान्युपेक्ष्य यथाप्राप्तवर्त्ती सिद्धिमवाप्नुयात् ॥
नानामतं महर्षीणां साधूनां योगिनां तथा ।
दृष्ट्वा निर्वेदमापन्नः को न शाम्यति मानवः ॥
कृत्वा मूर्त्तिपरिज्ञानं चैतन्यस्य न किं गुरुः ।
निर्वेदसमता युक्त्या यस्तारयति संसृतेः ॥
पश्य भूतविकारांस्त्वं भूतमात्रान् यथार्थतः ।
तत्क्षणात् द्वन्द्वनिर्मुक्तः स्वरूपस्थो भविष्यति ॥
वासना एव संसार इति सर्व्वं विमुच्यताम् ।
तत्त्यागो वासनात्यागात् स्थितिरद्य यथातथा ॥

इति निर्वेदाष्टकम् ।

विहाय वैरिणं काममर्थञ्चानर्थसङ्कुलम् ।
धर्ममेव तयोर्हेतुं सर्व्वत्रानादरं कुरु ॥
स्वप्नेन्द्रजालवत् पश्य त्रीणि पञ्चदिनानि वा ।
मित्रक्षेत्र धनागार दारादायादि सम्पदः ॥
यत्र यत्र भवेत्तृष्णा संसारस्तत्र तत्र हि ।
प्रौढ़वैराग्यमास्थाय वीततृष्णः सुखीभव ॥



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तृष्णामात्रात्मको बन्धस्तन्नाशो मोक्ष उच्यते ।
भवासंसक्तिमात्रेण प्राप्तितुष्टिर्मुहुर्मुहुः ॥
त्वमेकश्चेतनः शुद्धो जडं विश्वमसत्तथा ।
अविद्यापि न किञ्चित् सा का बुभुत्सा तथापि ते ॥
राज्यं सुताः कलत्राणि शरीराणि सुखानि च ।
संसक्तस्यापि नष्टानि तव जन्मनि जन्मनि ॥
अलमर्थेन कामेन सुकृतेनापि कर्म्मणा ।
एभ्यः संसारकान्तारे न विश्रान्तमभून्मनः ॥
कृतं न कति जन्मानि कायेन मनसा गिरा ।
दुःखमायासदं कर्म्म तदद्याप्युपरम्यताम् ॥

इत्युपशमाष्टकम् ॥ गुरुः ॥

भावाभावविकारश्च स्वभावादिति निश्चयः ।
निर्व्विकारो गतक्लेशः सुखेनैवोपशाम्यति ॥
ईश्वरः सर्व्वनिर्म्माता नो हानिरिति निश्चयी ।
साध्यादर्शी निरायासः कुर्व्वन्नपि न लिप्यते ॥
चिन्तया जायते दुःखं नान्यथेहेति निश्चयी ।
तया हीनः सुखी शान्तः सर्व्वत्र गलितस्पृहः ॥
नाहं देहो न मे देहो बोधोऽहमिति निश्चयी ।
कैवल्यमिव संप्राप्तो न स्मरत्यकृतं कृतम् ॥
आब्रह्मस्तम्बपर्य्यन्तमहमेवेति निश्चयी ।
निर्व्विकल्पः शुचिः शान्तः प्राप्ताप्राप्तेषु निर्वृतः ॥
नानाश्चर्य्यमयं विश्वं न किञ्चिदिति निश्चयी ।
निर्व्वासनः स्फूर्त्तिमात्रो न किञ्चिदिव शाम्यति ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

इत्यज्ञाननाशकाष्टकम् ॥ शिष्यः ॥

कायकृत्यासहः पूर्वं ततोवाग्विस्तरासहः ।
अथ चिन्तासहस्तस्मादेवमेवाहमास्थितः ॥
प्रीत्यभावेन शब्दादेरदृश्यत्वेन चात्मनः ।
निःक्षिप्यैकाग्रहृदयः एवमेवाहमास्थितः ॥
समाध्यासादिविक्षिप्तौ व्यवहारः समाधये ।
एवं विलोक्य नियम एवमेवाहमास्थितः ॥
हेयोपादेयविरहादेवं हर्षविषादयोः ॥
स्वभावादि यथा ब्रह्म एवमेवाहमास्थितः ।
आश्रमानाश्रमध्यानं चित्तस्वीकृतवर्ज्जनम् ॥
विकल्पं मम वीक्ष्यैते एवमेवाहमास्थितः ।
कर्म्मानुष्ठानमज्ञानाद्यथैवोपरमस्तथा ॥
बुद्ध्वा सम्यगिदं तत्त्वं एवमेवाहमास्थितः ।
अचिन्त्यं चिन्त्यमानोऽपि चिन्तारूपं भजत्यसौ ॥
त्यक्त्वा तद्भावनं तस्मादेवमेवाहमास्थितः ।
एवमेव कृतं येन सकृतार्थो भवेदसौ ॥

इत्युपरमाष्टकम् ।

अकिञ्चनं भवस्वास्थ्यं कौपीनत्वेन दुर्ल्लभम् ।
त्यागादाने विहायास्म देहमासे यथासुखम् ॥
कुत्रापि खेदः कायस्य जिह्वा कुत्रापि खिद्यते ।
मनः कुत्रापि तं त्यक्त्वा पुरुषार्थे स्थितं सुखम् ॥
कृतं किमपि नैव स्यादिति सञ्चिन्त्य तत्त्वतः ।
यदा यत् कर्त्तुमायाति तत्कृत्वासे यथासुखम् ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

कर्म्मनिष्कर्म्मनिर्बन्धभावा देहस्थयोगिनः ।
सङ्गात् संयोगविरहादहमासे यथासुखम् ॥
अर्थानर्थौ न मे स्थित्या गत्या वा शयनेन वा ।
तिष्ठन् गच्छन् स्वपंस्तस्मादहमासे यथासुखम् ॥
स्वपतो नास्ति मे हानिः सिद्धिर्यत्नवतो न वा ।
नाशोल्लासौ विहायास्मादहमासे यथासुखम् ॥
सुखादिरूपानियमं भावेष्वालोक्य भूरिशः ।
शुभाशुभे विहायास्मादहमासे यथासुखम् ॥

इति यथासुखसप्तकम् ।

प्रकृत्या शून्यचित्तो यः प्रमादाद्भावभावतः ।
निद्रितो बोधित इव क्षीणसंसरणो यथा ॥
क्व धनानि क्व मित्राणि क्व मे विषयदस्यवः ।
क्व शास्त्रं क्व च विज्ञानं यदा मे गलिता स्पृहा ॥
विज्ञानसाक्षिपुरुषे परमात्मनि चेश्वरे ।
नैराश्ये बन्धमोक्षे च का चिन्ता मुक्तये मम ॥
अन्तर्विकल्पशून्यस्य बहिःस्वच्छन्दचारिणः ।
भ्रान्तस्य च दशास्तास्तादृशा एव जानते ॥

इति शान्तिचतुष्कम् ।

यथा तथोपदेशेन कृतार्थः सत्त्वबुद्धिमान् ।
आजीवमपि जिज्ञासुः परस्तत्र विमुह्यति ॥
मोक्षोविषयवैराग्यं बन्धो वैषयिको रसः ।
एतावदेव विज्ञानं यथेच्छसि तथा कुरु ॥
वाग्मिप्राज्ञमहोद्योगं जनं मूकं जडालसम् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

करोति तत्त्वबोधोऽयमतस्त्यक्तो बुभुक्षुभिः ॥
न त्वं देहो न ते देहो भोक्ता कर्त्ता नवा भवान्।
चिद्रूपोऽसि सदा साक्षी निरपेक्षः सुखञ्चर ॥
रागद्वेषौ मनोधर्म्मौ न मनस्ते कदाचन।
निर्व्विकल्पोऽसि बोधात्मा निर्व्विकारः सुखञ्चर ॥
सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि।
विज्ञाय निरहङ्कारो निर्म्ममस्त्वं सुखीभव ॥
विश्वं स्फुरति यत्रेदं तरङ्गा इव सागरे।
तत्त्वमेव न सन्देहश्चिन्मूर्त्तौ विज्वरो भव ॥
श्रद्धत्स्व तात श्रद्धत्स्व नात्र मोहं कुरुष्व भोः।
ज्ञानस्वरूपो भगवान् आत्मा त्वं प्रकृतेः परः ॥
गुणैः संवेष्टितो देहस्तिष्ठत्यायाति याति वा।
आत्मा न गन्ता नागन्ता किमेतमनुशोचसि ॥
देहस्तिष्ठतु कल्पान्तं गच्छत्वद्यैव वा पुनः।
क्व वृद्धिः क्व च वा हानिस्तव चिन्मात्ररूपिणः ॥
तत्पारं न महाम्भोधौ विश्ववीचिः स्वभावतः।
उदेतु वास्तमायातु न मे वृद्धिर्नवा क्षतिः ॥
तात चिन्मात्ररूपोऽसि न ते भिन्नमिदं जगत्।
अतः कस्य कथं कुत्र हेयोपादेयकल्पना ॥
एकस्मिन्नव्यये शान्ते चिदंशे निर्म्मले त्वयि।
कुतो जन्म कुतः कर्म्म कुतोऽहङ्कार एव वा ॥
यत्त्वं पश्यसि तत्रैकस्त्वमेव प्रतिभाससे।



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

किं पृथग्भासते स्वर्णे कङ्कणाङ्गदनूपुरम् ॥
अयं सोऽहमयं नाहं विभागमिति सन्त्यज ।
सर्व्वमात्मेति निश्चित्य निःसङ्कल्पः सुखीभव ॥
तवैवाज्ञानतो विश्वं त्वमेकः परमार्थतः ।
त्वत्तोनान्योऽस्ति संसारी नासंसारी च कश्चन ॥
भ्रान्तिमात्रमिदं विश्वं न किञ्चिदिति निश्चयी ।
निर्व्वासनः स्फूर्त्तिमात्रो न किञ्चिदिति शाम्यति ॥
एकमेव भवाम्भोधावासीदस्ति भविष्यति ।
न ते बन्धोऽस्तिमोक्षोवा कृतकृत्यः सुखञ्चर ॥
त्यजावधानं सर्व्वत्र मा किञ्चित् हृदि धारय ।
आत्मा त्वं मुक्त एवासि किं विमृष्य करिष्यसि ॥

इति तत्त्वोपदेशविंशतिकम् । गुरुः ।

आचक्ष्व शृणु वा तात नानाशास्त्राण्यनेकधा ।
तथापि न तव स्वास्थ्यं सर्व्वविस्मरणादृते ॥
भोगं कर्म्म समाधिं वा कुरु विज्ञ तथापि ते ।
चित्तं निरस्तसर्व्वाशमत्यर्थं रोचयिष्यति ॥
आयासात् सकलोदुःखी नैवं जानाति कश्चन ।
अनेनैवोपदेशेन धन्यः प्राप्नोति निर्वृतिम् ॥
आयासात् खिद्यते यस्तु निमेषोन्मेषयोरपि ।
तस्यालस्य धुरीणस्य सुखं नान्यस्य कस्यचित् ॥
इदं कृतमिदं नेति द्वन्द्वैर्यस्य यदा मनः ।
धर्मार्थकाममोक्षेषु निरपेक्षस्तदा भवेत् ॥
विरक्तो विषयद्वेष्टा रागी विषयलोलुपः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्रीलक्ष्मीधर - विद्यामन्दिर,
देवप्रयाग ( गढ़वाल-हिमालय )
व्यवस्था


गृहमोक्षे विहीनस्तु न विरक्तो न रागवान् ॥
हेयोपादेयता तावत् संसारविटपाङ्कुरः ।
स्पृहा जीवति यावद्वै निर्विचारदशास्पदम् ॥
वीतरागोहि निर्दुःखस्तस्मिन्नपि न खिद्यते ।
प्रवृत्तौ जायते रागो निवृत्तौ द्वेष एव हि ॥
निर्द्वन्द्वो बालवद्धीमान् एवमेव व्यवस्थितः ।
हातुमिच्छसि संसारं रागी दुःखजिहासया ॥
वीतरागोहि निर्दुःखस्तस्मिन्नपि न खिद्यते ।
यस्याभिमानोमोक्षेषु देहेषु ममता तथा ॥
नवा योगी नवा ज्ञानी केवलं दुःखभागसौ ।
हरो यद्युपदेष्टा ते हरिः कमलजोऽपि वा ।
तथापि न तव स्वास्थ्यं सर्व्वविस्मरणादृते ॥

इति विशेषैकादश । शुभः ।

तेन ज्ञानफलं प्राप्तं योगाभ्यासफलं तथा ।
न प्रस्खलेद्धि योनित्यमेकाकी रमते तु वा ॥
न कदाचित् जगत्यस्मिन् तत्त्वतो(त्वं तप्तो)हन्तु खिद्यते ।
यत एकेन तेनेदं पूर्णं ब्रह्माण्डमण्डलम् ॥
न जातु विषयाः केपि स्वरोमान् हर्षयत्यमी ।
सल्लकीपल्लवप्रीतिमिरेभं निम्बपल्लवाः ॥
यस्तु भोगेषु भुक्तेषु न भवत्यधिवासितः ।
अनुक्तेषु निराकाङ्क्षी तादृशो भवदुर्लभः ॥
बुभुक्षुरिह संसारे मुमुक्षुरपि दृश्यते ।
भोगमोक्षनिराकाङ्क्षी विरलोहि महाशयः ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

धर्म्मार्थकाममोक्षेषु जीविते मरणे तथा ।
कस्याप्युदारचित्तस्य हेयोपादेयता न हि ॥
वाञ्छा न विश्वविलये न द्वेषस्तस्य वा स्थितौ ।
यथा जीविकया तस्मात् धन्य आस्ते यथासुखम् ॥
कृतार्थोऽनेन ज्ञानेनेत्येवं गलितधीः कृती ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्नास्ते यथासुखम् ॥
शून्या दृष्टिर्वृथाचेष्टा विकलानीन्द्रियाणि वा ।
न स्पृहा न विविक्तिर्व्वा क्षीणसंसारसागरे ॥
न जागर्त्ति न निद्राति नोन्मीलति न मीलति ।
अहो परदशा कापि वर्त्तते मुक्तचेतसाम् ॥
सर्व्वत्र दृश्यते स्वस्थः सर्व्वत्र विमलाशयः ।
समस्तवासनामुक्तो मुक्तः सर्व्वत्र राजते ॥
पश्यन् शृण्वन् स्पृशन् जिघ्रन् श्वसन् गृह्णन् वदन् व्रजन् ।
ईहितानीहिते मुक्तो मुक्त एव महाशयः ॥
न निन्दति न च स्तौति न हृष्यति न कुप्यति ।
न ददाति न गृह्णाति मुक्तः सर्व्वत्र नीरसः ॥
सानुरागां स्त्रियं दृष्ट्वा मृत्युं वा समुपस्थितम् ।
अविह्वलमनाः स्वस्थो मुक्तएव महाशयः ॥
सुखे दुःखे नच क्लेशे सम्पत्सु च विपत्सु ।
विशेषोनैव धीरस्य सर्व्वत्र समदर्शिनः ॥
न हिंसा नैव कारुण्यं नौद्धत्यं न च दीनता ।
नाश्चर्य्यं नैव च क्षोभः क्षीणे संसारसागरे ॥
न मुक्तो विषय द्वेष्टा नवा विषयलोलुपः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

असंसक्तमना नित्यं प्राप्ताप्राप्तमुपासते ॥
समाधानासमाधानं हिताहितविकल्पना ।
शून्यचित्तो न जानाति कैवल्यमिव संस्थित: ॥
निर्म्ममो निरहङ्कारो न किञ्चिदिति निश्चयी ।
अन्तर्गलितसर्व्वाश: कुर्व्वन्नपि न लिप्यते ॥
मन: प्रकाश: संमोह: स्वप्नजाड्यविवर्ज्जित: ।
दशां कामपि संप्राप्तोभवेदगलित मानस: ।

इति तत्त्वज्ञान विंशतिकम् । शुभ: ॥

यस्य बोधोदयस्तावत् स्वप्नवद्भवति भ्रम: ।
तस्मै सुखैकरूपाय नम: शान्ताये तेजसे ॥
अर्ज्जयित्वापि नानार्थान् भोगानाप्नोति पुष्कलान् ।
नहि सर्व्वपरित्यागमन्तरेण सुखीभवेत् ॥
कर्त्तव्यचण्डमार्त्तण्ड ज्वालादुष्टान्तरात्मन: ।
कुत: प्रशमपीयूषधारासारमृते सुखम् ॥
भवोऽयं भावनामात्रो न किञ्चित् परमार्थत: ।
नास्त्यभाव: स्वभावानां भावाभावविभाविनाम् ॥
न दूरे न च संकोचो लब्धमेवात्मन: पदम् ।
निर्व्विकल्पं निरायासं निर्व्विकारं निरञ्जनम् ॥
व्यामोहमात्रविरतौ स्वरूपादानमात्रत: ।
वीतशोका विराजन्ते निरावरणदृष्टय: ॥
समस्तं कल्पनामात्रमात्मा मुक्त: सनातन: ।
इति विज्ञाय धीरोहि किमभ्यस्यति बालवत् ॥



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

आत्मा ब्रह्मेति निश्चित्य भावाभावौ विकल्पितौ ।
निष्कामः किं विजानाति किं ब्रूते किं करोति च ॥
अयं सोऽहमहं नाहमिति क्षीणा विकल्पना ।
सर्व्वमात्मेति निश्चित्य भावाभावौ विकल्पितौ ॥
न विक्षेपो न चैकाग्र्यं नातिबोधो न मूढता ।
न सुखं न च वा दुःखमुपशान्तस्य योगिनः ॥
स्वाराज्ये भैक्ष्यवृत्तौ च लाभालाभे जने वने ।
निर्व्विकल्पस्वभावस्य न विशेषोऽस्ति योगिनः ॥
क्व धर्म्मः क्व च वा कायः क्वाचार्थः क्व विवेकिता ।
इदं कृतमिदं नेति द्वन्द्वैर्मुक्तस्य योगिनः ॥
कृत्यं किमपि नैवास्ति न कापि हृदि वाञ्छना ।
यथाजीवनमेवेह जीवन्मुक्तस्य योगिनः ॥
क्व मोहः क्व च वा विश्वं क्व तज्ज्ञानं क्व मुक्तता ।
सर्व्वसंकल्पसीमायां विश्रान्तस्य महात्मनः ॥
येन विश्वमिदं दृष्टं यन्नास्तीति करोति वै ।
निर्व्वासनः किं कुरुते पश्यन्नपि न पश्यति ॥
न दृष्टो नात्मविक्षेपो निरोधं कुरुते त्वसौ ।
उदारस्तु न विक्षिप्तः साध्याभावात् करोति किम् ॥
धीरो लोकविपर्य्यस्तो वर्त्तमानोपि बालवत् ।
न समाधिं न विक्षेपं न लेपं स्वस्य पश्यति ॥
भावाभावविहीनोयस्तृप्तो निर्वासनो बुधः ।
नैव किञ्चित् कृतं तेन लोकदृष्ट्यापि कुर्व्वता ॥
प्रवृत्तौ वा निवृत्तौ वा नैव धीरस्य दुर्ग्रहः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यदा यत् कर्त्तुमायाति तत् कृत्वा तिष्ठतः सुखम् ॥
निर्व्वासनो निरालम्बः स्वच्छन्दोमुक्तबन्धनः ।
क्षिप्तः संसारवातेन चेष्टते शुष्कपर्णवत् ॥
असंसारस्य न क्वापि न हर्षो न विषादिता ।
सुशीतलमना नित्यं विदेहमिव राजते ॥
कुत्रापि न जिहासास्ति नाशोवापि न कुत्रचित् ।
आत्मारामस्य धीरस्य शीतलस्य महात्मनः ॥
प्रकृत्या शून्यचित्तस्य कुर्व्वतोऽस्य यदृच्छया ।
प्राकृतस्येव धीरस्य न मानोनापमानता ॥
कृतं देहेन कर्म्मेदं न मया शुद्धरूपिणा ।
इति चिन्ताकुलोधीरः कुर्व्वन्नपि करोति न ॥
प्रारब्धादीनि कुरुते न भवेदपि बालिशः ।
जीवन्मुक्तः सुखी श्रीमान् संसरन्नपि शोभते ॥
नानाविचारसुश्रान्तो धीरोविश्रान्तिमागतः ।
न कल्पते न जानाति न शृणोति न पश्यति ॥
असमाधेरविक्षेपात् न मुमुक्षु र्न चेतरः ।
निश्चित्य कल्पितं पश्यन् ब्रह्मैवास्ते महाशयः ॥
यस्यान्तः स्यादहङ्कारः करोति न करोति सः ।
निरहङ्कारधीरेण न किञ्चिदकृतं कृतम् ॥
नोद्विग्नं न च सन्तुष्टं कर्त्तृस्पन्दविवर्ज्जितम् ।
निराशं गतसन्देहं चित्तं मुक्तस्य राजते ॥
निर्ध्यातुं चेष्टितं वापि यच्चित्तं न प्रवर्त्तते ।
निर्निमित्तमिदं किन्तु निर्ध्यायति विचेष्टते ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तद्द्वयार्थमिमाकर्ण्य मन्दः प्राप्नोति मूढताम्।
अथवा याति सङ्कोचममूढः कोऽपि मूढवत्॥
एकाग्रता निरोधोवा मूढैरभ्यस्यतेभृशम्।
धीराः कृत्यं न पश्यन्ति सुप्तवत् स्वपदे स्थिताः॥
अप्रयत्नात् प्रयत्नाद्वा मूढोनाप्नोति निर्वृतिम्।
तत्त्वनिश्चयमात्रेण प्राज्ञोभवति निर्वृतः॥
शुद्धं बुद्धं प्रियं पूर्णं निष्प्रपञ्चं निरामयम्।
आत्मानं तं न जानन्ति तत्राभ्यासपरा जडाः॥
नाप्नोति कर्म्मणामोक्षं विमूढोऽभ्यासरूपतः।
धन्योविज्ञानमात्रेण मुक्तस्तिष्ठत्यविक्रियः॥
मूढोनाप्नोति तद्ब्रह्म यतोभवितुमिच्छति।
अनिच्छन्नपि धीरोहि परं ब्रह्मस्वरूपकम्॥
निराधारा ग्रहव्यग्रा मूढाः संसारपोषकाः।
एतस्य चार्थस्य मूलोच्छेदः कृतो बुधैः॥
नाशान्तिं लभते मूढो यतः शमितुमिच्छति।
धीरस्तत्त्वं विनिश्चित्य सर्व्वदा शान्तमानसः॥
क्वात्मनो दर्शनन्तस्य यद्दृष्टमवलम्बते।
धीरास्तं तं न पश्यन्ति पश्यन्त्यात्मानमव्ययम्॥
क्व निरोधो विमूढस्य योनिर्ब्बन्धं करोति वै।
स्वारामस्यैव धीरस्य सर्व्वदा सावकृत्रिमः॥
भावस्य भावकः कश्चिदेवमेव निराकुलः।
शुद्धमद्वयमात्मानं भावयन्ति कुबुद्धयः॥
न तु जानन्ति संमोहात् यावज्जीवमनिर्वृताः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

मुमुक्षोर्बुद्धिरालम्बमन्तरेण न विद्यते ॥
निरालम्बैव निष्कामा बुद्धिर्मुक्तस्य सर्व्वदा।
विषयद्वीपिनोवीक्ष्य चकिताः परमार्थिनः ॥
विशन्ति झटिति क्रोड़ं निरोधैकाग्रसिद्धये।
निर्व्वासनं हरिं दृष्ट्वा तूष्णीं विषयदन्तिनः ॥
पलायन्ते न शक्तास्ते सेवन्ते कृतचाटवः।
न मुक्तिः कारिता तात निःसङ्गो मुक्तमानसः ॥
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्नास्ते यथासुखम्।
वस्तुस्मरणमात्रेण शुद्धबुद्धिर्निराकुलः ॥
नैवाचारमनाचारमौदास्यं वा प्रपश्यति।
यदा यत् कर्त्तुमायाति तदा तत् कुरुते ऋजुः ॥
शुभं वाप्यशुभं वापि तस्य चेष्टा हि बालवत्।
स्वालम्बात् सुखमाप्नोति स्वालम्बात् लभते परम् ॥
स्वालम्बात् निर्वृतिं गच्छेत् स्वालम्बात् परमं पदम्।
अकर्त्तृत्वमभोक्तृत्वं स्वात्मनोमन्यते यदा ॥
तदा क्षीणा भवन्त्येव समस्ताश्चित्तवृत्तयः।
उच्छृङ्खलाप्यकृतका स्थितिर्धीरस्य राजते ॥
न तु सस्पृहचित्तस्य शान्तिर्मूढ़स्य कृत्रिमा।
विलसन्ति महाभूता विशन्ति गिरिगह्वरान् ॥
निरस्तकल्पना धीरा अबद्धा मुक्तबुद्धयः।
श्रोत्रियं देवतां तीर्थमङ्गनां भूपतिं शुक्रम् ॥
दृष्ट्वा संपूज्य धीरस्य न क्वापि हृदि वासना।
भृत्यैः पुत्रैः कलत्रैश्च दुर्हित्तैश्चापि गोत्रजैः ॥



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

विरक्ताधिक्कतोयोगी नायाति विकृतिं क्वचित् ॥
सन्तुष्टोऽपि न सन्तुष्टः खिन्नोऽपि न च खिद्यते ।
अस्याश्चर्य्यदशां तां तां तादृशा एव जानते ॥
कर्त्तव्यतैव संसारे न तां पश्यन्ति सूरयः ।
शून्याकारोनवाकारो निर्व्विकारो निरामयः ॥
अकुर्व्वन्नपि संक्षोभाद्व्यग्रः सर्व्वत्र मूढधीः ।
स्वभावाद्यस्य नैवार्त्तिर्लौकवद्व्यवहारिणः ॥
महार्णवद्गवाक्षोभ्योगतक्लेशः सुशोभते ।
निवृत्तिरपि मूढस्य प्रवृत्तिरपि जायते ॥
प्रवृत्तिरपि धीरस्य निवृत्तिफलगामिनी ।
परिग्रहेषु वैराग्यं प्रायोमूढस्य दृश्यते ॥
देहे विगलिताशस्य क्व रागः क्व विरागिता ।
भावना भावनासक्ता दृष्टिर्मूढस्य सर्व्वदा ॥
भाव्यभावनमायातु स्वस्थस्यादृष्टिरूपिणः ।
सर्व्वारम्भेषु निष्कामो यश्चरेद्बालवन्मुनिः ॥
न लेपस्तस्य शुद्धस्य क्रियमाणेऽपि कर्म्मणि ।
सएव धन्य आत्मज्ञः सर्व्वभावेषु यः समः ॥
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् विस्तब्धमानसः ।
क्व संसारः क्व चाभासः क्व साध्यं क्व च साधनम् ॥
आकाशस्येव धीरस्य निर्व्विकल्पस्य सर्व्वदा ।
स जयत्यथ सन्नासी पूर्णस्व साधुविग्रहः ॥
अकृत्रिमोऽनवच्छिन्नः समाधिस्तस्य वर्त्तते ।
बहुनात्र किमुक्तेन ज्ञाततत्वोमहाशयः ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

भोगमोक्षनिराकाङ्क्षी सदा सर्व्वत्र नीरसः।
महादादिजगत्सर्व्वं नाममात्रविजृम्भनम्॥
विहाय शुद्धबोधस्य किं कृत्यमवशिष्यते।
भ्रममूलमिदं सर्व्वं किञ्चिन्नास्तीति निश्चयी॥
अलक्ष्यस्फुरणः शुद्धः स्वभावेनैव शाम्यति।
शुद्धस्फुरणहृदयस्य दृश्यमानमपश्यतः॥
क्व विधिः क्व च वैराग्यं क्व त्यागः क्व समोऽपि वा।
स्फुरणं तत्तद्रूपेण प्रकृतिञ्च न पश्यतः॥
क्व बन्धः क्व च वा मोक्षः क्व हर्षः क्व विषादिता।
बुद्धिपर्य्यन्तसंसारे मायामात्रं विवर्त्तते॥
निर्म्ममोनिरहङ्कारो निष्कामः शोभते बुधः।
अक्षयं गतसन्तापमात्मानं पश्यतो मुनेः॥
क्वाविद्या क्व च वा विश्वं क्व देहोऽहं ममेति च।
निरोधादीनि कर्म्माणि जहाति जड़धीर्यदि॥
मनोरथान् प्रलापांश्च कर्त्तुमाप्नोति तत्क्षणात्।
मन्दः श्रुत्वापि तत्त्वस्थो न जहाति विमूढताम्॥
निर्विकल्पो वहिर्यत्नादन्तर्व्विषयलालसः।
ज्ञानाकुलितकर्म्मा यो लोकदृष्टाप्यकर्म्मकृत्॥
नाप्नोत्यवसरं कर्त्तुं ब्रह्मएव न किञ्चन।
क्व तमः क्व प्रकाशोवा हानं क्वचन किञ्चन॥
निर्व्विकारस्य धीरस्य निरालम्बस्य सर्व्वदा।
क्व धैर्य्यं क्व विवेकित्वं क्व निरातङ्कतापि वा॥
अनिर्व्वाच्यः स्वभावस्तु निःस्वभावस्य योगिनः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

न स्वर्गो नैव नरको जीवन्मुक्तिर्न चैव हि ॥
बहुनात्र किमुक्तेन योगदृष्ट्या न किञ्चन ।
नैव प्रार्थयते लाभमलाभे नानुशोचति ॥
धीरस्य शीतलं चित्तमस्तेनैव पूरणम् ।
नाशान्तं स्तौति निष्कामो न दुष्टमपि निन्दति ॥
समदुःखसुखस्तृप्तः किञ्चित् कृत्यं न पश्यति ।
धीरो न द्वेष्टि संसारमात्मानं न दिदृक्षति ॥
हर्षामर्षविनिर्मुक्तो न मृतो न च जीवति ।
निःस्नेहः पुत्रदारादौ निष्कामो विषयेषु च ॥
निश्चिन्त्यः स्वशरीरेऽपि निराशः शोभते बुधः ।
तुष्टिः सर्व्वत्र धीरस्य यथा पतितवर्त्तिनः ॥
स्वच्छन्दं चरतो देशान् यत्रास्तमिति शायिनः ।
पततु देतु वा देहो नान्यचिन्ता महात्मनः ॥
स्वभावभूमिं विश्रान्ति विस्मृता शेषहृत्तयः ।
अकिञ्चनः कामचारो निर्द्वन्द्वश्छिन्नसंशयः ॥
असक्तः सर्व्वभावेषु केवलो रमते बुधः ।
निर्म्ममः शोभते धीरः समलोष्टाश्मकाञ्चनः ॥
सुभिन्नहृदयग्रन्थिर्व्विनिर्धूतरजस्तमः ।
सर्व्वत्रानवधानस्य न किञ्चिद्विद्यते हृदि ॥
युक्तात्मनो विटपस्य तुलना केन जायते ।
जानन्नपि न जानाति पश्यन्नपि न पश्यति ॥
ब्रुवन्नपि न च ब्रूते कोऽन्योनिर्व्वासनादृते ।
भिक्षुर्व्वा भूपतिर्व्वापि योनिष्कामः स शोभते ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्रीलक्ष्मीधर - विद्यामन्दिर.
देवप्रयाग ( गढ़वाल-हिमालय )
व्यवस्थापक- पं. चक्रधरजोशी

८०२
द.वे.२९



भावेषु गलिता यस्य शोभनाशोभनामतिः ।
क्व स्वाच्छन्द्यं क्व सङ्कोचः क्व वा तत्त्वविनिश्चयः ॥
निर्व्याजार्जव भूतस्य चरितार्थस्य योगिनः ।
आत्मचिन्ता विहीनेन निराशेन गतार्त्तिना ॥
अन्तर्यदनुभूयेत तत् कृतार्थस्य कथ्यते ।
सुषुप्तोऽपि सुषुप्तो न स्वप्नेऽपि शयितो न च ॥
जाग्रश्चापि न जाग्रञ्च धीरस्वप्नं पदे पदे ।
स सचिन्तोऽपि निश्चिन्तः सेन्द्रियोऽपि निरिन्द्रियः ॥
सुबुद्धिरपि निर्बुद्धिः साहङ्कारोऽनहङ्कृतिः ।
न सुखीन विरक्तो वा न दुःखी न च रागवान् ॥
न मुमुक्षुर्नचामुक्तः किञ्चिन्नैव च किञ्चन ।
विक्षेपेऽपि न विक्षिप्तः समाधौ न समाधिमान् ॥
जाड्येऽपि न जड़ोधन्यः पाण्डित्येऽपि न पण्डितः ।
मुक्तो यथास्थितः स्वस्थः कृतकर्त्तव्यनिश्चयः ॥
समः सर्व्वत्र वैतृष्ण्यः न स्मरत्यकृतं कृतम् ।
न प्रीयते वन्द्यमानो निन्द्यमानो न कुप्यति ॥
नैवोद्विजति मरणे नाभिनन्दति जीवने ।
न धावति जनाकीर्णं नारण्यमुपशान्तधीः ॥
यथा तथा यत्र तत्र समये वावतिष्ठते ॥

इति शमशतकम् ।

तत्त्वविज्ञानसन्देशमादाय हृदयोदरात् ।
नानाविधिपरामर्शात् स्वल्पाकारः कृतो मया ॥



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

क्व धर्म्मः क्व च वा कामः क्व चार्थः क्व विवेकिता ।
क्व द्वैतं क्व च वाद्वैतं स्वमहिम्नि स्थितस्य मे ॥
क्व भूतं क्व भविष्यं वा वर्त्तमानमपि क्व वा ।
क्व देशः क्व च वानित्यं स्वमहिम्नि स्थितस्य मे ॥
क्व चात्मा क्व च वा नात्मा क्व शुभं क्वाशुभं तथा ।
क्व चिन्ता क्व च वाचिन्ता स्वमहिम्नि स्थितस्य मे ॥
क्व स्वप्नः क्व सुषुप्तिर्व्वा क्व च जागरणन्तथा ।
क्व तुरीयं भयं क्वापि स्वमहिम्नि स्थितस्य मे ॥
क्व दूरं क्व समीपं वा बाह्यं क्वाभ्यन्तरन्तथा ।
क्व स्थूलं क्व च वा सूक्ष्मं स्वमहिम्नि स्थितस्य मे ॥
क्व मृत्युर्जीवितं वा क्व क्व लोकाः क्वास्यलौकिकम् ।
क्व लयः क्व समाधिर्व्वा स्वमहिम्नि स्थितस्य मे ॥
अलं त्रिवर्गकथया योगस्य कथयाप्यलम् ।
अलं विज्ञानकथया विश्रान्तस्य महात्मनि ॥

इति विश्रान्त्यष्टकम् ।

क्व भूतानि क्व देहो वा क्वेन्द्रियाणि क्व वा मनः ।
क्व शून्यं क्व च नैराश्यं मत्स्वरूपे निरञ्जने ॥
क्व शास्त्रं क्व च विज्ञानं क्व वा निर्व्विषयं मनः ।
क्व तृप्तिः क्व वितृष्णात्वं गतद्वन्द्वस्य मे सदा ॥
क्व विद्या क्व च वा विद्या क्वाहं क्वेदं मम क्व वा ।
क्व बन्धः क्व च वा मोक्षः स्वरूपस्य स्वरूपता ॥
क्व प्रारब्धानि कर्म्माणि जीवन्मुक्तिरपि क्व वा ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

क्व तद्विदेहकैवल्यं निर्व्विषयस्य सर्व्वदा ॥
क्व कर्त्ता क्व च वा भोक्ता निष्क्रियं स्फुरणं क्व वा।
क्व परोक्षं फलं वा क्व निःस्वभावस्य सर्व्वदा ॥
क्व लोकः क्व मुमुक्षुर्व्वा क्व योगी ज्ञानवान् क्व वा।
क्व बन्धः क्व च वा मोक्षः स्वरूपस्याद्वयस्य मे ॥
क्व सृष्टिः क्व च संहारः क्व साध्यं क्व च साधनम्।
क्व साधकः क्व सिद्धिर्व्वा स्वस्वरूपेऽहमद्वयः ॥
क्व प्रमाता प्रमाणं क्व क्व प्रमेयं क्व चाप्रमा।
क्व किञ्चित् क्व न किञ्चिद्वा सर्व्वदा विमलस्य मे ॥
क्व विक्षेपः क्व वैराग्यं निरोधः क्व विमूढता।
क्व हर्षः क्व विषादो वा सर्व्वदा निष्क्रियस्य मे ॥
क्व चैव व्यवहारो वा क्व च वा संयमार्थिता।
क्व सुखं क्व च वा दुःखं सदा निर्व्विषयस्य मे ॥
क्व माया क्व च संसारः क्व प्रीतिर्व्विरतिः क्व वा।
क्व जीवः क्व च तद्ब्रह्म सर्व्वदा विमलस्य मे ॥
क्व प्रवृत्तिर्निवृत्तिर्व्वा क्व मुक्तिः क्व च बन्धनम्।
कूटस्थ निर्व्विभागस्य स्वस्थस्य मम सर्व्वदा ॥
क्वोपदेशः क्व शास्त्रं वा क्व शिष्यः क्व च वा गुरुः।
क्व चापि पुरुषार्थो वा निरुपाधेः शिवस्य मे।
क्व चास्ति क्व च वा नास्ति क्वास्ति चैकं क्व च द्वयम् ॥
बहुनात्र किमुक्तेन किञ्चिन्नो तिष्ठते मम।

इति अष्टावक्रसंहिता सम्पूर्णा।

शुभमस्तु।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

